# संस्कृत-वार्ताः

**20-12-2020**

**प्रातः - 06: 55**

**मुख्य-वार्ताः**

- प्रधानमंत्री नरेंद्र मोदी न्यगादीत् यत् भारतीय उद्योगस्य क्षमतां प्रतिबद्धतां च जगत: समक्षं उपस्थापनस्य समुचित- कालोयं समापन्न:।
- प्रधानमंत्रिणा नरेन्द्रमोदिना श्व: वियतनामस्य प्रधानमन्त्रिणा सार्धं दृश्यश्रव्यप्रणाल्या सम्मेलने सहभागितां विधास्यते।
- रक्षामन्त्री राजनाथसिंह: प्रावोचत् यत् नवीन भारतं कस्यचिदपि आक्रमणस्य समुचितं उत्तरं दातुं समर्थं सक्षमं च अस्ति।
- भारते कोरोनात: स्वस्थता प्रतिशतता अनुदिनम् संवर्धते। इत्थं देशे स्वस्थतामानं संवर्ध्य पंच-नवति-दशमलव-चतुः षट् परिमितम् संवृत्तम्।
- ह्य: क्रिकेट क्रीडा स्पर्धायां ऑस्ट्रेलिया दलेन भारतम् अष्टक्रीडकानां हानिपुरस्सरं पराभूतम् ।

**कोविड आपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युद्धयति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु

**मुखावरंक सन्धारयन्तु -- सामाजिकदौर्यं परिपालयन्तु,**
**पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**प्रधानमंत्री मोदी**

प्रधानमंत्री नरेंद्र मोदी न्यगादीत् यत् भारतीय उद्योगस्य क्षमतां प्रतिबद्धतां च जगत: समक्षं उपस्थापनस्य समुचित- कालोयं समापन्न:। तेन उद्योगव्यवसायजगत् समाहूतं, प्रोक्तं यत् आगामिषु वर्षेषु आत्मनिर्भर-भारतस्य निर्माणाय यथाशक्ति प्रयतन्ताम्। असौ ह्य: दृश्यश्रव्यसंवादप्रणालिकया ऐषम: एसोचैम-स्थापना-सप्ताहस्य कार्यक्रमं सम्बोधयति स्म। प्रधानमन्त्रिणा प्रोक्तं यत् विश्वम् इदानीं चतुर्थीं औद्योगिक-क्रांतिं प्रति द्रुतगत्या अग्रेसरत् अस्ति। नव- प्रविधिरूप-पराणि भूरि संख्याकानि समाह्वानानि अथ तासां समाह्वानानां समाधानानि समक्षम् आयास्यन्ति। प्रधानमंत्री प्रावोचत् यत् अनुसंधान-विकास-क्षेत्रयो: निवेश: संवर्धनीय:, एतदर्थं निजिक्षेत्रै: अत्र निवेश: अस्ति आवश्यक:।

**प्रधानमंत्री वियतनाम**

प्रधानमंत्रिणा नरेन्द्रमोदिना श्व: वियतनामस्य प्रधानमन्त्रिणा सार्धं दृश्यश्रव्यप्रणाल्या सम्मेलने सहभागितां विधास्यति। सम्मेलने अस्मिन् उभौ नेतारौ भारत-वियतनामये सम्बन्द्धेषु विस्तृत चर्चां विधास्यत:। उभयो: देशयो: सम्बन्धा: सुदृढा: सन्ति।

**राजनाथ सिंह:**

रक्षामन्त्री राजनाथसिंह: प्रावोचत् यत् नवीन भारतं कस्यचिदपि आक्रमणस्य समुचितं उत्तरं दातुं समर्थं सक्षमं च अस्ति। युद्ध प्रणालीषु नीतिषु च नित्यं परिवर्तनानि जायमानानि सन्ति। तेन वायुसेनाया: अधिकारिण: नवीनप्राविधिक युद्धान् प्रति सचेतिता: भवितुं निर्दिष्टा:। हैदराबादस्य समीपं डुंडीगले स्थले ह्य: वायु-सेना-अकादम्या: पासिंग-आउट-परेड इति सैन्यप्रयाण-कुर्वतां समूहं उद्बोधयन् असौ प्रावोचत् यत् वायु-सेनाया: नवीना: अधिकारिण: युद्धस्य प्रवर्तमानां नीतिं समाह्वानं च प्रति सर्तका: भवन्तु, अथ तै: नवीन-प्रविधे: प्रयोगेऽपि सक्षमा: भवितव्या:।

**अमितशाह:**

गृहमन्त्री अमितशाह: अद्य बंगालप्रदेशे बिरभूमस्थाने राजमार्गानिर्वाचन-प्रचार-प्रदर्शनं करिष्यति। अस्य प्रारम्भ: हनुमान मन्दिर स्टेडियम् इत्याख्यात् स्थानात् भूत्वा समाप्ति: बोलपूर क्रॉसरोड् इति स्थाने भविष्यति। श्रीशाह: विश्वभारतीविश्वद्यालयं गत्वा गुरूदेव-रविन्द्रनाथ टैगोरम् अपि पुष्पांजलिं समर्पयिष्यति।

**कोरोना**

भारते कोरोनातः स्वस्थता प्रतिशतता अनुदिनम् संवर्धते। इत्थं देशे स्वस्थतामानं संवर्ध्य पंच-नवति-दशमलव-चतुः षट् परिमितम् संवृत्तम्। विगते अहोरात्रे संक्रमणात् मुक्तिमाप्तवतां संख्या भूयोपि ऊनस्त्रिंशत्-सहस्रमिता संजाता। स्वास्थ्य-मन्त्रालयो ब्रूते यत् इदानीं यावत् पंचाशत्-सहस्रोत्तर-पंच-नवति-लक्षमिताः जनाः स्वस्थाः अभूवन्। तत्रैव मृत्युमानं देशे एक दशमलव चतुः पंच परिमितम् विद्यते। यद्धि अधिविश्वं सर्वाधिकं मृत्युमानमिदं विद्यते। भारतीय-चिकित्सानुसन्धान-परिषदानुसारं कोरोना-प्रारूप-परीक्षणानि राष्ट्रे षोडश-कोटि-मितानि सम्पन्नानि।

**निर्वाचन-निर्देशा**

निर्वाचन-आयोगेन आसाम-केरला-तमिनाडु-पश्चिमबंगाल-पुडुचेर्याणां च निर्वाचन-सम्बद्धाधिकारिणः निर्दिष्टाः यत् कस्यचिदपि अधिकारिणः निर्वाचनेषु स्वजिलायां नियुक्तिः मा भूयात्। निर्वाचन-आयोगद्वारा प्रोक्तं यत् अनुशासन-नियमाः प्रशासनेन पाल्याः एव।

**क्रिकेट्**

हयः क्रिकेट क्रीडा स्पर्धायां ऑस्ट्रेलिया दलेन भारतम् अष्टक्रीडकानां हानिपुरस्सरं पराभूतम् । ऑस्ट्रेलियायाः एडीलेड् क्रीडांगणे प्रथमेयं क्रिकेट् निकष स्पर्धा अवर्तत। ऑस्ट्रेलियायाः नायकः टिमपेन् श्रेष्ठक्रीडकत्वेन चितः।

**।। इति वार्ताः ।।**